॥ श्यामलादण्डकं कालिदासविरचितम् ॥

॥ अथ श्यामला दण्डकम् ॥

॥ ध्यानम् ॥

माणिक्यवीणामुपलालयन्तीं
मदालसां मञ्जुलवाग्विलासाम् ।
माहेन्द्रनीलद्युतिकोमलाङ्गीं
मातङ्गकन्यां मनसा स्मरामि ॥ १॥

चतुर्भुजे चन्द्रकलावतंसे
कुचोन्नते कुङ्कुमरागशोणे ।
पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाण-
हस्ते नमस्ते जगदेकमातः ॥ २॥

॥ विनियोगः ॥

माता मरकतश्यामा मातङ्गी मदशालिनी ।
कुर्यात् कटाक्षं कल्याणी कदंबवनवासिनी ॥ ३॥

॥ स्तुति ॥

जय मातङ्गतनये जय नीलोत्पलद्युते ।
जय सङ्गीतरसिके जय लीलाशुकप्रिये ॥ ४॥

॥ दण्डकम् ॥

जय जननि सुधासमुद्रान्तरुद्यन्मणीद्वीपसंरूढ् -
बिल्वाटवीमध्यकल्पद्रुमाकल्पकादंबकान्तारवासप्रिये
कृत्तिवासप्रिये सर्वलोकप्रिये

सादरारब्धसंगीतसंभावनासंभ्रमालोल-
नीपस्रगाबद्धचूलीसनाथत्रिके सानुमत्पुत्रिके

शेखरीभूतशीतांशुरेखामयूखावलीबद्ध-
सुस्निग्धनीलालकश्रेणिशृङ्गारिते लोकसंभाविते
कामलीलाधनुस्सन्निभभ्रूलतापुष्पसन्दोहसन्देहकृल्लोचने

वाक्सुधासेचने चारुगोरोचनापङ्ककेलीललामाभिरामे सुरामे रमे

प्रोल्लसद्ध्वालिकामौक्तिकश्रेणिकाचन्द्रिकामण्डलोद्भासि
लावण्यगण्डस्थलन्यस्तकस्तूरिकापत्ररेखासमुद्भूतसौरभ्य-
संभ्रान्तभृङ्गाङ्गनागीतसान्द्रीभवन्मन्द्रतन्त्रीस्वरे
सुस्वरे भास्वरे

वल्लकीवादनप्रक्रियालोलतालीदलाबद्ध-
ताटङ्कभूषाविशेषान्विते सिद्धसम्मानिते

दिव्यहालामदोद्वेलहेलालसच्चक्षुरान्दोलनश्रीसमाक्षिप्तकर्णैक-
नीलोत्पले श्यामले पूरिताशेषलोकाभिवाञ्छाफले श्रीफले

स्वेदबिन्दूल्लसद्फाललावण्य निष्यन्दसन्दोहसन्देहकृन्नासिकामौक्तिके
सर्वविश्वात्मिके सर्वसिद्ध्यात्मिके कालिके मुग्द्धमन्दस्मितोदारवक्त्र-
स्फुरत् पूगताम्बूलकर्पूरखण्डोत्करे ज्ञानमुद्राकरे सर्वसम्पत्करे
पद्मभास्वत्करे श्रीकरे

कुन्दपुष्पद्युतिस्निग्धदन्तावलीनिर्मलालोलकल्लोलसम्मेलन
स्मेरशोणाधरे चारुवीणाधरे पक्वबिंबाधरे

सुललित नवयौवनारंभचन्द्रोदयोद्वेललावण्यदुग्धार्णवाविर्भवत्
कम्बुबिम्बोकभृत्कन्थरे सत्कलामन्दिरे मन्थरे

दिव्यरत्नप्रभाबन्धुरच्छन्नहारादिभूषासमुद्योतमानानवद्याङ्ग-
शोभे शुभे

रत्नकेयूररश्मिच्छटापल्लवप्रोल्लसद्दोल्लताराजिते योगिभिः
पूजिते विश्वदिङ्मण्डलव्याप्तमाणिक्यतेजस्स्फुरत्कङ्कणालंकृते
विभ्रमालंकृते साधुभिः पूजिते वासरारंभवेलासमुज्जृम्भ
माणारविन्दप्रतिद्वन्द्विपाणिद्वये सन्ततोद्यद्दये अद्वये
दिव्यरत्नोर्मिकादीधितिस्तोमसन्ध्यायमानाङ्गुलीपल्लवोद्य
न्नखेन्दुप्रभामण्डले सन्नुताखण्डले चित्प्रभामण्डले प्रोल्लसत्कुण्डले

तारकाराजिनीकाशहारावलिस्मेर चारुस्तनाभोगभारानमन्मध्य-
वल्लीवलिच्छेद वीचीसमुद्यत्समुल्लाससन्दर्शिताकारसौन्दर्यरत्नाकरे
वल्लकीभृत्करे किङ्करश्रीकरे

हेमकुंभोपमोत्तुङ्ग वक्षोजभारावनम्रे त्रिलोकावनम्रे
लसद्वृत्तगंभीर नाभीसरस्तीरशैवालशङ्काकरश्यामरोमावलीभूषणे
मञ्जुसंभाषणे

चारुशिञ्चत्कटीसूत्रनिर्भत्सितानङ्गलीलधनुश्शिञ्चिनीडंबरे
दिव्यरत्नाम्बरे

पद्मरागोल्लस न्मेखलामौक्तिकश्रोणिशोभाजितस्वर्णभूभृत्तले
चन्द्रिकाशीतले विकसितनवकिंशुकाताम्रदिव्यांशुकच्छन्न
चारूरुशोभापराभूतसिन्दूरशोणायमानेन्द्रमातङ्ग
हस्मार्ग्गले वैभवानर्ग्गले श्यामले कोमलस्निग्द्ध
नीलोत्पलोत्पादितानङ्गतूणीरशङ्काकरोदार
जंघालते चारुलीलागते नम्रदिक्पालसीमन्तिनी
कुन्तलस्निग्द्धनीलप्रभापुञ्चसञ्जातदुर्वाङ्कुराशङ्क
सारंगसंयोगरिंखन्नखेन्दूज्ज्वले प्रोज्ज्वले
निर्मले प्रह्व देवेश लक्ष्मीश भूतेश तोयेश वाणीश कीनाश
दैत्येश यक्षेश वाय्वग्निकोटीरमाणिक्य संहृष्टबालातपोद्दाम--
लाक्षारसारुण्यतारुण्य लक्ष्मीगृहिताङ्घ्रिपद्म्मे सुपद्मे उमे

सुरुचिरनवरत्नपीठस्थिते सुस्थिते
रत्नपद्मासने रत्नसिम्हासने शङ्खपद्मद्वयोपाश्रिते विश्रुते
तत्र विघ्नेशदुर्गावटुक्षेत्रपालैर्युते मत्तमातङ्ग
कन्यासमूहान्विते भैरवैरष्टभिर्वेष्टिते
मञ्चुलामेनकाद्यङ्गनामानिते देवि वामादिभिः शक्तिभिस्सेविते
धात्रि लक्ष्म्यादिशक्त्यष्टकैः संयुते मातृकामण्डलैर्मण्डिते
यक्षगन्धर्वसिद्धाङ्गना मण्डलैरर्चिते

भैरवी संवृते पञ्चबाणात्मिके पञ्चबाणेन रत्या च
संभाविते प्रीतिभाजा वसन्तेन चानन्दिते भक्तिभाजं परं श्रेयसे
कल्पसे योगिनां मानसे द्योतसे छन्दसामोजसा भ्राजसे गीतविद्या
विनोदाति तृष्णेन कृष्णेन सम्पूज्यसे भक्तिमच्चेतसा वेधसा
स्तूयसे विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे

श्रवणहरदक्षिणक्वाणया वीणया किन्नरैर्गीयसे
यक्षगन्धर्वसिद्धाङ्गना मण्डलैरर्च्यसे

सर्वसौभाग्यवाञ्छावतीभिर् वधूभिस्सुराणां समाराध्यसे
सर्वविद्याविशेषत्मकं चाटुगाथा समुच्चारणाकण्ठमूलोल्लसद्-

वर्णराजित्रयं कोमलश्यामलोदारपक्षद्वयं तुण्डशोभातिदूरीभवत्
किंशुकं तं शुकं लालयन्ती परिक्रीडसे

पाणिपद्मद्वयेनाक्षमालामपि स्फाटिकीं ज्ञानसारात्मकं var मालागुण
पुस्तकञ्चङ्कुशं पाशमाबिभ्रती तेन सञ्चिन्त्यसे तस्य
वक्त्रान्तरात् गद्यपद्यात्मिका भारती निस्सरेत् येन वाध्वंसनादा
कृतिर्भाव्यसे तस्य वश्या भवन्तिस्तियः पूरुषाः येन वा
शातकंबद्युतिर्भाव्यसे सोपि लक्ष्मीसहस्रैः परिक्रीडते

किन्न सिद्ध्येद्वपुः श्यामलं कोमलं चन्द्रचूडान्वितं
तावकं ध्यायतः तस्य लीला सरोवारिधीः तस्य केलीवनं
नन्दनं तस्य भद्रासनं भूतलं तस्य गीर्देवता किङ्करि
तस्य चाज्ञाकरी श्री स्वयं

सर्वतीर्थात्मिके सर्व मन्त्रात्मिके
सर्व यन्त्रात्मिके सर्व तन्त्रात्मिके
सर्व चक्रात्मिके सर्व शक्त्यात्मिके
सर्व पीठात्मिके सर्व वेदात्मिके
सर्व विद्यात्मिके सर्व योगात्मिके
सर्व वर्णात्मिके सर्वगीतात्मिके
सर्व नादात्मिके सर्व शब्दात्मिके
सर्व विश्वात्मिके सर्व वर्गात्मिके
सर्व सर्वात्मिके सर्वगे सर्व रूपे
जगन्मातृके पाहि मां पाहि मां पाहि मां
देवि तुभ्यं नमो देवि तुभ्यं नमो देवि तुभ्यं नमो
देवि तुभ्यं नमः

॥ इति श्यामला दण्डकम् सम्पूर्णम् ॥